प्र वां० ( १५७५;१७०३ ) ०आ वृणे । इन्द्राग्नी० ( १५७६;१७०४ ) ०कर्मणा । इन्द्राग्नी० ( १५७७;१६९४ ) ०पथ्या अनु । तोशा० ( १७०२ ) ।

प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत । वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥
अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते असद् बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥ ( ऋ० ८।८९।३,४ )

इन्द्र...इन्दवः ( १५८७-१५८८ ) । प्र तत् ( १६२६ ) । किं० ( १६२५ ) । वषट्...ध्रुवा वहन्तीन्दवो द्युम्नमापो न स धृक् ( १६२७-१६२९ ) । वाय...विश्वायुः ( १६३०-१६३६ ) ।

न हि ते अग्ने तन्वै क्रूरं विवेद मर्त्यः । कपिर्बभस्ति तेजनं पुनर्जरायु गौरिव ॥
अग्ने विश्वेभिरग्निभिर्देवेभिर्महया गिरः । यज्ञेषु य उ चायवः ॥
अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नः सूनुमतः ॥
अग्ने सहस्व पृतना अभिमातीरपास्य । दुष्टरस्तरन्नरातीर्वर्चो धा यज्ञवाहसे ॥ ( ऋ० ३।२४।४,५,१ )
नदं व ओदतीनां नदं योयुवतीनाम् । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ।
ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥ ( ऋ० ८।६९।२, ३ )

अग्ने...पूर्व्यम् ( १५५२-१५५३ ) । प्र सुन्वा...असदम् ( १३८६-१३८८ ) । मो...मदीषु ( १६७५-१६७८ ) । होता...तना ( १४७७-१४७९ ) । त्यमु...धने ( १६४२-१६४४ ) । प्र सोमासो...पीतये ( ७६९-७७१ ) । कस्तं...दुरिता ( १६८२-१६८३ ) ।

तं त्वा यज्ञेभिरीमहे तं गीर्भिर्गिर्वणस्तम । इन्द्र यथा चिदाविथ वाजेषु पुरुमाय्यम् ॥
यस्य ते स्वादु सख्यं स्वाद्वी प्रणीतिरद्रिवः । यज्ञो वितन्तसाय्यः ॥
उरु णस्तन्वे३ तन उरु क्षयाय नस्कृधि । उरु णो यन्धि जीवसे ॥ ( ऋ० ८।६८।१०-१२ )
यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥
तव द्युमन्तो अर्चयो ग्रावेवोच्यते बृहत् । उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः ॥
एवाँ अग्निं वसूयवः सहसानं ववन्दिम । स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः ॥ ( ऋ० ५।२५।७-९)

अया...यातवे ( १२१६-१२१७ ) ।

इन्दुरिन्द्र इति श्रवमग्नो विविधा असि होता पावक यक्षि । मन्द्रो यजिष्ठो अध्वरे ॥ ७ ॥
विष्यो विरुक्म मन्मभिरद्रोघसा वहोशते । यिविष्यन्देवमजम वीतये ॥ ८ ॥
अभिप्रियं सिपुषिता वसो गहि मन्दाव धीतिभिर्हितः ॥ ९ ॥
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥ ४ ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ ५ ॥
आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ॥ ७ ॥ ( ऋ० १०।९।४, ५, ७ )

तं गूर्धया...पूर्व्यम् ( १६८७-१६८८ ) ।

त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे । त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥
कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षते ॥ ( ऋ० ७।१६।५, ६ )

प्र वो...समापीन् ( १७९३-१७९५ ) । तया...हि कम् ( १४३६-१४३८ ) । वा त० ( १८४० ) । यददो० ( १८४१ ) । उत वात० ( १८४१ ) । इन्द्र क्रतुं ...तरामसि ( १४५६-१४५७ ) ( खण्डाः १-३० ) ॥ मन्त्राः

इत्युत्तरार्चिकः समाप्तः ।